श्रीवेङ्कटेश

# अष्टोत्तर–सहस्रनाम स्तोत्राणि

(सुप्रभात, स्तोत्र, प्रपत्ति, मङ्गळाशासन सहित)

प्रकाशिका :
तिरुमल - तिरुपति देवस्थानम्,
तिरुपति.

सौम्य संवत्सर
१९६९.

श्रीः

श्रीवेङ्कटेश

# अष्टोत्तर-सहस्रनाम

## सुप्रभात - स्तोत्र - प्रपत्ति - मङ्गळाशासनस्तोत्राणि

तिरुमल - तिरुपति देवस्थान, तिरुपति.

एग्जिक्यूटिवआफीसरपदभाजा
श्री एम्. चन्द्रमौलिरेड्डि, एम० ए०, आई० ए० एस० महाशयेन
प्रकटीकृतानि

सौम्य ] १९६९. [ ६२ पैसे

# विषयसूची

श्रीः

श्री श्रीनिवासपरब्रह्मणे नमः

# ॥ श्रीवेङ्कटेशसुप्रभातम् ॥

कौसल्या सुप्रजा राम पूर्वा सन्ध्या प्रवर्तते ।
उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ॥ १

उत्तिष्ठोत्तिष्ठ गोविन्द उत्तिष्ठ गरुडध्वज ।
उत्तिष्ठ कमलाकान्त त्रैलोक्यं मङ्गलं कुरु ॥ २

मातस्समस्तजगतां मधुकैटभारेः
वक्षोविहारिणि मनोहरदिव्यरूपे ।
श्रीस्वामिनि श्रितजनप्रियदानशीले
श्रीवेङ्कटेशदयिते तव सुप्रभातम् ॥ ३

तव सुप्रभातमरविन्दलोचने
भवतु प्रसन्नमुखचन्द्रमण्डले ।
विधिशङ्करेन्द्रवनिताभिरर्चिते
वृषशैलनाथदयिते दयानिधे ॥ ४

अत्र्यादिसप्तऋषयस्समुपास्य सन्ध्यां
आकाशसिन्धुकमलानि मनोहराणि ।
आदाय पादयुगमर्चयितुं प्रपन्नाः
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ ५

पञ्चाननाब्जभवषण्मुखवासवाद्याः
त्रैविक्रमादिचरितं विबुधाः स्तुवन्ति ।
भाषापतिः पठति वासरशुद्धिमारात्
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ ६

ईषत्प्रफुल्लसरसीरुहनारिकेल-
पूगद्रुमादिसुमनोहरपालिकानाम् ।
आवाति मन्दमनिलस्सह दिव्यगन्धैः
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ ७

उन्मील्य नेत्रयुगमुत्तमपञ्जरस्थाः
पात्रावशिष्टकदलीफलपायसानि ।
भुक्त्वा सलीलमथ केलिशुकाः पठन्ति
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ ८

तन्त्रीप्रकर्षमधुरस्वनया विपञ्च्या
गायत्यनन्तचरितं तव नारदोऽपि ।
भाषासमग्रमसकृत्करचाररम्यं
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ ९

भृङ्गावली च मकरन्दरसानुविद्ध-
झङ्कारगीतनिनदैस्सह सेवनाय ।
निर्यात्युपान्तसरसीकमलोदरेभ्यः
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ १०

योषागणेन वरदध्नि विमथ्यमाने
घोषालयेषु दधिमन्थनतीव्रघोषाः ।
रोषात्कलिं विदधते ककुभश्च कुम्भाः
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ ११

पद्मेशमित्रशतपत्रगतालिवर्गाः
हर्तुं श्रियं कुवलयस्य निजाङ्गलक्ष्म्या ।
भेरीनिनादमिव बिभ्रति तीव्रनादं
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ १२

श्रीमन्नभीष्टवरदाखिललोकबन्धो
श्रीश्रीनिवास जगदेकदयैकसिन्धो ।
श्रीदेवतागृहभुजान्तरदिव्यमूर्ते
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ १३

श्रीस्वामिपुष्करिणिकाऽऽप्लुवनिर्मलाङ्गाः
श्रेयोऽर्थिनो हरविरिञ्चसनन्दनाद्याः ।
द्वारे वसन्ति वरवेत्रहतोत्तमाङ्गाः
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ १४

श्रीशेषशैलगरुडाचलवेङ्कटाद्रि-
नारायणाद्रिवृषभाद्रिवृषाद्रिमुख्याम् ।
आख्यां त्वदीयवसतेरनिशं वदन्ति
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ १५

सेवापराश्शिवसुरेशकृशानुधर्म-
रक्षोऽम्बुनाथपवमानधनाधिनाथाः ।
बद्धाञ्जलिप्रविलसन्निजशीर्षदेशाः
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ १६

धाटीषु ते विहगराजमृगाधिराज-
नागाधिराजगजराजहयाधिराजाः ।
स्वस्वाधिकारमहिमाधिकमर्थयन्ते
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ १७

सूर्येन्दुभौमबुधवाक्पतिकाव्यसौरि-
स्वर्भानुकेतुदिविषत्परिषत्प्रधानाः ।
त्वद्दासदासचरमावधिदासदासाः
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ १८

त्वत्पादधूलिभरितस्फुरितोत्तमाङ्गाः
स्वर्गापवर्गनिरपेक्षनिजान्तरङ्गाः ।
कल्पागमाकलनयाऽऽकुलतां लभन्ते
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ १९

त्वद्गोपुराग्रशिखराणि निरीक्षमाणाः
स्वर्गापवर्गपदवीं परमां श्रयन्तः ।
मर्त्या मनुष्यभुवने मतिमाश्रयन्ते
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ २०

श्रीभूमिनायक दयादिगुणामृताब्धे
देवाधिदेव जगदेकशरण्यमूर्ते ।
श्रीमन्ननन्तगरुडादिभिरर्चिताङ्घ्रे
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ २१

श्रीपद्मनाभ पुरुषोत्तम वासुदेव
वैकुण्ठ माधव जनार्दन चक्रपाणे ।
श्रीवत्सचिह्न शरणागतपारिजात
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ २२

कन्दर्पदर्पहरसुन्दरदिव्यमूर्ते
कान्ताकुचाम्बुरुहकुड्मललोलदृष्टे ।
कल्याणनिर्मलगुणाकरदिव्यकीर्ते
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ २३

मीनाकृते कमठकोलनृसिंहवर्णिन्
स्वामिन् परश्वथतपोधन रामचन्द्र ।
शेषांशराम यदुनन्दन कल्किरूप
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ २४

एलालवङ्गघनसारसुगन्धतीर्थं
दिव्यं वियत्सरिति हेमघटेषु पूर्णम् ।
धृत्वाऽद्य वैदिकशिखामणयः प्रहृष्टाः
तिष्ठन्ति वेङ्कटपते तव सुप्रभातम् ॥ २५

भास्वानुदेति विकचानि सरोरुहाणि
संपूरयन्ति निनदैः ककुभो विहङ्गाः ।
श्रीवैष्णवास्सततमर्थितमङ्गलास्ते
धामाश्रयन्ति तव वेङ्कट सुप्रभातम् ॥ २६

ब्रह्मादयस्सुरवरास्समहर्षयस्ते
सन्तस्सनन्दनमुखास्तव योगिवर्याः ।
धामान्तिके तव हि मङ्गलवस्तुहस्ताः
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ २७

लक्ष्मीनिवास निरवद्यगुणैकसिन्धो
संसारसागरसमुत्तरणैकसेतो ।
वेदान्तवेद्य निजवैभव भक्तभोग्य
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ २८

इत्थं वृषाचलपतेरिह सुप्रभातम्
　ये मानवाः प्रतिदिनं पठितुं प्रवृत्ताः ।
तेषां प्रभातसमये स्मृतिरङ्गभाजां
　प्रज्ञां परार्थसुलभां परमां प्रसूते ॥ २९

॥ इति श्रीवेङ्कटेशसुप्रभातम् ॥

श्रीः

# ॥ श्रीवेङ्कटेशस्तोत्रम् ॥

कमलाकुचचूचुककुङ्कुमतो
नियतारुणितातुलनीलतनो
कमलायतलोचन लोकपते
विजयीभव वेङ्कटशैलपते ॥ १

सचतुर्मुखषण्मुखपञ्चमुख-
प्रमुखाखिलदैवतमौलिमणे ।
शरणागतवत्सल सारनिधे
परिपालय मां वृषशैलपते ॥ २

अतिवेलतया तव दुर्विषहै
रनुवेलकृतैरपराधशतैः ।
भरितं त्वरितं वृषशैलपते
परया कृपया परिपाहि हरे ॥ ३

अधिवेङ्कटशैलमुदारमते
जनताभिमताधिकदानरतात् ।
परदेवतयागदितान्निगमैः
कमलादयितान्न परं कलये ॥ ४

कलवेणुरवावशगोपवधू-
शतकोटिवृतात्स्मरकोटिसमात् ।
प्रतिवल्लविकाभिमतात्सुखदात्
वसुदेवसुतान्न परं कलये ॥ ५

अभिरामगुणाकर दाशरथे
जगदेकधनुर्धर धीरमते ।
रघुनायक राम रमेश विभो
वरदो भव देव दयाजलधे ॥ ६

अवनीतनयाकमनीयकरं
रजनीकरचारुमुखाम्बुरुहम् ।
रजनीचरराजतमोमिहरं
महनीयमहं रघुराममये ॥ ७

सुमुखं सुहृदं सुलभं सुखदं
स्वनुजं च सुकायममोघशरम् ।
अपहाय रघूद्वहमन्यमहं
न कथञ्चन कञ्चन जातु भजे ॥ ८

विना वेङ्कटेशं न नाथो न नाथः
सदा वेङ्कटेशं स्मरामि स्मरामि ।
हरे वेङ्कटेश प्रसीद प्रसीद
प्रियं वेङ्कटेश प्रयच्छ प्रयच्छ ॥ ९

अहं दूरतस्ते पदाम्भोजयुग्म-
प्रणामेच्छयाऽऽगत्य सेवां करोमि ।
सकृत्सेवया नित्यसेवाफलं त्वं
प्रयच्छ प्रयच्छ प्रभो वेङ्कटेश ॥ १०

अज्ञानिना मया दोषान्
अशेषान्विहितान् हरे ।
क्षमस्व त्वं क्षमस्व त्वं
शेषशैलशिखामणे ॥ ११

॥ इति श्रीवेङ्कटेशस्तोत्रम् ॥

---

श्रीः

# ॥ श्रीवेङ्कटेशप्रपत्तिः ॥

ईशानां जगतोऽस्य वेंङ्कटपतेर्विष्णोः परां प्रेयसीं
तद्वक्षःस्थलनित्यवासरसिकां तत्क्षान्तिसंवर्धिनीम् ।
पद्मालङ्कृतपाणिपल्लवयुगां पद्मासनस्थां श्रियं
वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम् ॥ १

श्रीमन् कृपाजलनिधे कृतसर्वलोक
सर्वज्ञ शक्त नतवत्सल सर्वशेषिन् ।
स्वामिन् सुशील सुलभाश्रितपारिजात
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ २

आनूपुरार्पितसुजातसुगन्धिपुष्प-
सौरभ्यसौरभकरौ समसन्निवेशौ ।
सौम्यौ सदाऽनुभवनेऽपि नवानुभाव्यौ
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ ३

सद्योविकासिसमुदित्वरसान्द्रराग-
सौरभ्यनिर्भरसरोरुहसाम्यवार्ताम् ।
सम्यक्षु साहसपदेषु विलेखयन्तौ
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ ४

रेखामयध्वजसुधाकलशातपत्र-
वज्राङ्कुशाम्बुरुहकल्पकशङ्खचक्रैः ।
भव्यैरलङ्कृततलौ परतत्त्वचिह्नैः
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ ५

ताम्रोदरद्युतिपराजितपद्मरागौ
बाह्यैर्महोभिरभिभूतमहेन्द्रनीलौ ।
उद्यन्नखांशुभिरुदस्तशशाङ्कभासौ
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ ६

सप्रेमभीति कमलाकरपल्लवाभ्यां
संवाहनेऽपि सपदि क्लममादधानौ ।
कान्ताववाङ्मनसगोचरसौकुमार्यौ
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ ७

लक्ष्मीमहीतदनुरूपनिजानुभाव-
नीलादिदिव्यमहिषीकरपल्लवानाम् ।
आरुण्यसंक्रमणतः किल सान्द्ररागौ
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ ८

नित्यानमद्विधिशिवादिकिरीटकोटि-
प्रत्युप्तदीप्तनवरत्नमहःप्ररोहैः ।
नीराजनाविधिमुदारमुपादधानौ
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ ९

विष्णोः पदे परम इत्युदितप्रशंसौ
यौ मध्व उत्स इति भोग्यतयाऽप्युपात्तौ ।
भूयस्तथेति तव पाणितलप्रदिष्टौ
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ १०

पार्थाय तत्सदृशसारथिना त्वयैव
यौ दर्शितौ स्वचरणौ शरणं व्रजेति ।
भूयोऽपि मह्यमिह तौ करदर्शितौ ते
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ ११

मन्मूर्ध्नि कालियफणे विकटाटवीषु
श्रीवेङ्कटाद्रिशिखरे शिरसि श्रुतीनाम् ।
चित्तेऽप्यनन्यमनसां सममाहितौ ते
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ १२

अम्लानहृष्यदवनीतलकीर्णपुष्पौ
श्रीवेङ्कटाद्रिशिखराभरणायमानौ ।
आनन्दिताखिलमनोनयनौ तवैतौ
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ १३

प्रायः प्रपन्नजनताप्रथमावगाह्यौ
मातुस्स्तनाविव शिशोरमृतायमानौ ।
प्राप्तौ परस्परतुलामतुलान्तरौ ते
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ १४

सत्त्वोत्तरैस्सततसेव्यपदाम्बुजेन
संसारतारकदयार्द्रदृगञ्चलेन ।
सौम्योपयन्तृमुनिना मम दर्शितौ ते
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ १५

श्रीश श्रिया घटिकया त्वदुपायभावे
प्राप्ये त्वयि स्वयमुपेयतया स्फुरन्त्या ।
नित्याश्रिताय निरवद्यगुणाय तुभ्यं
स्यां किङ्करो वृषगिरीश न जातु मह्यम् ॥ १६

॥ इति श्रीवेङ्कटेशस्तोत्रम् ॥

श्रीः

# ॥ श्रीवेङ्कटेशमङ्गलाशासनम् ॥

* * *

श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥ १

लक्ष्मीसविभ्रमालोकसुभ्रूविभ्रमचक्षुषे ।
चक्षुषे सर्वलोकानां वेङ्कटेशाय मङ्गलम् ॥ २

श्रीवेङ्कटाद्रिशृङ्गाग्रमङ्गलाभरणाङ्घ्रये ।
मङ्गलानां निवासाय वेङ्कटेशाय मङ्गलम् ॥ ३

सर्वावयवसौन्दर्यसंपदा सर्वचेतसाम् ।
सदा संमोहनायास्तु वेङ्कटेशाय मङ्गलम् ॥ ४

नित्याय निरवद्याय सत्यानन्दचिदात्मने ।
सर्वान्तरात्मने श्रीमद्वेङ्कटेशाय मङ्गलम् ॥ ५

स्वतस्सर्वविदे सर्वशक्तये सर्वशेषिणे ।
सुलभाय सुशीलाय वेङ्कटेशाय मङ्गलम् ॥ ६

परस्मै ब्रह्मणे पूर्णकामाय परमात्मने ।
प्रयुञ्जे परतत्त्वाय वेङ्कटेशाय मङ्गलम् ॥ ७

आकालतत्त्वमश्रान्तमात्मनामनुपश्यताम् ।
अतृप्त्यमृतरूपाय वेङ्कटेशाय मङ्गलम् ॥ ८

प्रायस्स्वचरणौ पुंसां शरण्यत्वेन पाणिना ।
कृपयाऽऽदिशते श्रीमद्वेङ्कटेशाय मङ्गलम् ॥ ९

दयामृततरङ्गिण्यास्तरङ्गैरिव शीतलैः ।
अपाङ्गैः सिञ्चते विश्वं वेङ्कटेशाय मङ्गलम् ॥ १०

स्रग्भूषाम्बरहेतीनां सुषमावहमूर्तये ।
सर्वार्तिशमनायास्तु वेङ्कटेशाय मङ्गलम् ॥ ११

श्रीवैकुण्ठविरक्ताय स्वामिपुष्करिणीतटे ।
रमया रममाणाय वेङ्कटेशाय मङ्गलम् ॥ १२

श्रीमत्सुन्दरजामातृमुनिमानसवासिने ।
सर्वलोकनिवासाय श्रीनिवासाय मङ्गलम् ॥ १३

मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वैराचार्यैस्सत्कृतायास्तु मङ्गलम् ॥ १४

॥ इति श्रीवेङ्कटेशमङ्गलाशासनम् ॥

श्रीरस्तु

श्री श्रीनिवासपरब्रह्मणे नमः

।। श्रीयै श्रीपद्मावत्यै नमः ।।

।। श्रीमते विष्वक्सेनाय नमः ।।

## ।। श्रीवेङ्कटेशाष्टोत्तरशतनामस्तोत्रम् ।।

* * *

श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ।।

श्रीवेङ्कटाचलाधीशं श्रियाऽध्यासितवक्षसम् ।
श्रितचेतनमन्दारं श्रीनिवासमहं भजे ।।

मुनयः सूत सर्वार्थतत्त्वज्ञ सर्ववेदान्तपारग ।
येन चाराधितः सद्यः श्रीमद्वेङ्कटनायकः ।। १

भवत्यभीष्टसर्वार्थप्रदस्तद् ब्रूहि नो मुने ।
इति पृष्टस्तदा सूतो ध्यात्वा स्वात्मनि तत्क्षणात् ।। २

उवाच - मुनिशार्दूलाञ्छ्रूयतामिति वै मुनिः ।
श्री सूतः-अस्ति किञ्चिन्महद्गोप्यं भगवत्प्रीतिकारकम् ।। ३

पुरा शेषेण कथितं कपिलाय महात्मने ।
नाम्नामष्टशतं पुण्यं पवित्रं पापनाशनम् ।। ४

आदाय हेमपद्मानि स्वर्णदीसंभवानि च ।
ब्रह्मा तु पूर्वमभ्यर्च्य श्रीमद्वेङ्कटनायकम् ॥ ५

अष्टोत्तरशतैर्दिव्यैः नामभिर्मुनिपूजितैः ।
स्वभीष्टं लब्धवान् ब्रह्मा सर्वलोकपितामहः ॥ ६

भवद्भिरपि पद्मैश्च समर्च्यस्तैश्च नामभिः ।
तेषां शेषनगाधीशमानसोल्लासकारिणाम् ॥ ७

नाम्नामष्टशतं वक्ष्ये वेङ्कटाद्रिनिवासिनः ।
आयुरारोग्यदं पुंसां धनधान्यसुखप्रदम् ॥ ८

ज्ञानप्रदं विशेषेण महदैश्वर्यकारकम् ।
अर्चयेन्नामभिर्दिव्यैः वेङ्कटेशपदाङ्कितैः ॥ ९

नाम्नामष्टशतस्यास्य ऋषिर्ब्रह्मा प्रकीर्तितः ।
छन्दोऽनुष्टुप्तथा देवो वेङ्कटेश उदाहृतः ॥ १०

नीलगोक्षीरसंभूतो बीजमित्युच्यते बुधैः
श्रीनिवासस्तथा शक्तिर्हृदयं वेङ्कटाधिपः ॥ ११

विनियोगस्तथाऽभीष्टसिद्ध्यर्थे च निगद्यते ।
ओं नमो वेङ्कटेशाय शेषाद्रिनिलयाय च ॥ १२

वृषदृग्गोचरायाथ विष्णवे सततं नमः ।
सदञ्जनगिरीशाय वृषाद्रिपतये नमः ॥ १३

मेरुपुत्रगिरीशाय सरःस्वामितटीजुषे ।
कुमाराकल्पसेव्याय वज्रिदृग्विषयाय च ॥  १४

सुवर्चलासुतन्यस्तसैनापत्यभराय च ।
रामाय पद्मनाभाय सदा वायुस्तुताय च ॥  १५

त्यक्तवैकुण्ठलोकाय गिरिकुञ्जविहारिणे ।
हरिचन्दनगोत्रेन्द्रस्वामिने सततं नमः ॥  १६

शङ्कराजन्यनेत्राब्जविषयाय नमो नमः ।
वसूपरिचरत्रात्रे कृष्णाय सततं नमः ॥  १७

अब्धिकन्यापरिष्वक्तवक्षसे वेङ्कटाय च ।
सनकादिमहायोगिपूजिताय नमो नमः ॥  १८

देवजित्प्रमुखानन्तदैत्यसङ्घप्रणाशिने ।
श्वेतद्वीपवसन्मुक्तपूजिताङ्घ्रियुगाय च ॥  १९

शेषपर्वतरूपत्वप्रकाशनपराय च ।
सानुस्थापितताक्ष्याय ताक्ष्याचलनिवासिने ॥  २०

मायागूढविमानाय गरुडस्कन्धवासिने ।
अनन्तशिरसे नित्यमनन्ताक्षाय ते नमः ॥  २१

अनन्तचरणायाथ श्रीशैलनिलयाय च ।
दामोदराय ये नित्यं नीलमेघनिभाय च ॥  २२

ब्रह्मादिदेवदुर्दर्शविश्वरूपाय ते नमः ।
वैकुण्ठागतसद्धेमविमानान्तर्गताय च ॥ २३

अगस्त्याभ्यर्थिताशेषजनदृग्गोचराय च ।
वासुदेवाय हरये तीर्थपञ्चकवासिने ॥ २४

वामदेवप्रियायाथ जनकेष्टप्रदाय च ।
मार्कण्डेयमहातीर्थजातपुण्यप्रदाय च ॥ २५

वाक्पतिब्रह्मदात्रे च चन्द्रलावण्यदायिने ।
नारायणनगेशाय ब्रह्मक्लृप्तोत्सवाय च ॥ २६

शङ्खचक्रवरानम्रलसत्करतलाय च ।
द्रवन्मृगमदासक्तविग्रहाय नमो नमः ॥ २७

केशवाय नमो नित्यं नित्ययौवनमूर्तये ।
अर्थितार्थप्रदात्रे च विश्वतीर्थाघहारिणे ॥ २८

तीर्थस्वामिसरःस्नातजनाभीष्टप्रदायिने ।
कुमारधारिकावासस्कन्दाभीष्टप्रदाय च ॥ २९

जानुदघ्नसमुद्भूतपोत्रिणे कूर्ममूर्तये ।
किन्नरद्वन्द्वशापान्तप्रदात्रे विभवे नमः ॥ ३०

वैखानसमुनिश्रेष्ठपूजिताय नमो नमः ।
सिंहाचलनिवासाय श्रीमन्नारायणाय च ॥ ३१

सद्भक्तनीलकण्ठार्च्य नृसिंहाय नमो नमः ।
कुमुदाक्षगणश्रेष्ठसैनापत्यप्रदाय च ॥ ३२

दुर्मेधःप्राणहर्त्रे च श्रीधराय नमो नमः ।
क्षत्रियान्तकरामाय मत्स्यरूपाय ते नमः ॥ ३३

पाण्डवारिप्रहर्त्रे च श्रीकराय नमो नमः ।
उपत्यकाप्रदेशस्थशङ्करध्यातमूर्तये ॥ ३४

रुक्माब्जसरसीकूललक्ष्मीकृततपस्विने ।
लसल्लक्ष्मीकराम्भोजदत्तकह्लारकस्रजे ॥ ३५

शालग्रामनिवासाय शुकदृग्गोचराय च ।
नारायणार्थिताशेषजनदृग्विषयाय च ॥ ३६

मृगयारसिकायाथ वृषभासुरहारिणे ।
अञ्जनागोत्रपतये वृषभाचलवासिने ॥ ३७

अञ्जनासुतदात्रे च माधवीयाघहारिणे ।
प्रियङ्गुप्रियभक्षाय श्वेतकोलवराय च ॥ ३८

नीलधेनुपयोधारासेकदेहोद्भवाय च ।
शङ्करप्रियमित्राय चोलपुत्रप्रियाय च ॥ ३९

सुधर्मिणीसुचैतन्यप्रदात्रे मधुघातिने ।
कृष्णाख्यविप्रवेदान्तदेशिकत्वप्रदाय च ॥ ४०

वराहाचलनाथाय बलभद्राय ते नमः ।
त्रिविक्रमाय महते हृषीकेशाय ते नमः ॥ ४१

अच्युताय नमो नित्यं नीलाद्रिनिलयाय च ।
नमः क्षीराब्धिनाथाय वैकुण्ठाचलवासिने ॥ ४२

मुकुन्दाय नमो नित्यमनन्ताय नमो नमः ।
विरिञ्चाभ्यर्थितानीतसौम्यरूपाय ते नमः ॥ ४३

सुवर्णमुखरीस्नातमनुजाभीष्टदायिने ।
हलायुधजगत्तीर्थसमस्तफलदायिने ॥ ४४

गोविन्दाय नमो नित्यं श्रीनिवासाय ते नमः ।
अष्टोत्तरशतं नाम्नां चतुर्थ्या नमसाऽन्वितम् ॥ ४५

यः पठेच्छृणुयान्नित्यं श्रद्धाभक्तिसमन्वितः ।
तस्य श्रीवेङ्कटेशस्तु प्रसन्नो भवति ध्रुवम् ॥ ४६

अर्चनायां विशेषेण ग्राह्यमष्टोत्तरं शतम् ।
वेङ्कटेशाभिधेयैर्यो वेङ्कटाद्रिनिवासिनम् ॥ ४७

अर्चयेन्नामभिस्तस्य फलं मुक्तिर्न संशयः ।
गोपनीयमिदं स्तोत्रं सर्वेषां न प्रकाशयेत् ॥ ४८

श्रद्धाभक्तियुजामेव दापयेन्नामसंग्रहम् ।
इति शेषेण कथितं कपिलाय महात्मने ॥ ४९

कपिलाख्यमहायोगिसकशात्तु मया श्रुतम् ।
तदुक्तं भवतामद्य सद्यः प्रीतिकरं हरेः ॥          ५०

इति श्री वराहपुराणान्तर्गत श्री वेङ्कटाचलमाहात्म्ये
श्रीवेङ्कटेशाष्टोत्तरशतनामकीर्तनं
नामैक षष्टितमोऽध्यायः

---

श्रीः

श्री श्रीनिवासपरब्रह्मणे नमः

# ॥ श्रीवेङ्कटेशाष्टोत्तरशतनामावलिः ॥

* * *

| | | |
|---|---|---|
| ॐ वेङ्कटेशाय | श्रीवेङ्कटेशाय नमः | |
| ,, शेषाद्रिनिलयाय | ,, | |
| ,, वृषद्दग्गोचराय | ,, | |
| ,, विष्णवे | ,, | |
| ,, सदञ्जनगिरीशाय | ,, | |
| ,, वृषाद्रिपतये | ,, | |
| ,, मेरुपुत्रगिरीशाय | ,, | |
| ,, सरःस्वामितटीजुषे | ,, | |
| ,, कुमाराकल्पसेव्याय | ,, | |
| ,, वज्रिदृग्विषयाय | ,, | १० |
| ,, सुवर्चलासुतन्यस्तसैनापत्यभराय | ,, | |
| ,, रामाय | ,, | |
| ,, पद्मनाभाय | ,, | |
| ,, सदा वायुस्तुताय | ,, | |
| ,, त्यक्तवैकुण्ठलोकाय | ,, | |
| ,, गिरिकुञ्जविहारिणे | ,, | |

| | | |
|---|---|---|
| ॐ हरिचन्दनगोत्रेन्द्रस्वामिने | श्रीवेङ्कटेशाय नमः | |
| ,, शङ्खराजन्यनेत्राब्जविषयाय | ,, | |
| ,, वसूपरिचरत्रात्रे | ,, | |
| ,, कृष्णाय | ,, | २० |
| ,, अब्धिकन्यापरिष्वक्तवक्षसे | ,, | |
| ,, वेङ्कटाय | ,, | |
| ,, सनकादिमहायोगिपूजिताय | ,, | |
| ,, देवजित्प्रमुखानन्तदैत्यसङ्घप्रणाशिने | ,, | |
| ,, श्वेतद्वीपवसन्मुक्तपूजिताङ्घ्रियुगाय | ,, | |
| ,, शेषपर्वतरूपत्वप्रकाशनपराय | ,, | |
| ,, सानुस्थापिततार्क्ष्याय | ,, | |
| ,, तार्क्ष्याचलनिवासिने | ,, | |
| ,, मायागूढविमानाय | ,, | |
| ,, गरुडस्कन्धवासिने | ,, | ३० |
| ,, अनन्तशिरसे | ,, | |
| ,, अनन्ताक्षाय | ,, | |
| ,, अनन्तचरणाय | ,, | |
| ,, श्रीशैलनिलयाय | ,, | |
| ,, दामोदराय | ,, | |
| ,, नीलमेघनिभाय | ,, | |
| ,, ब्रह्मादिदेवदुर्दर्शविश्वरूपाय | ,, | |
| ,, वैकुण्ठागतसद्धेमविमानान्तर्गताय | ,, | |

ॐ अगस्त्याभ्यर्थिताशेषजनदृग्गोचराय श्रीवेङ्कटेशाय नमः
,, वासुदेवाय ,, ४०
,, हरये ,,
,, तीर्थपञ्चकवासिने ,,
,, वामदेवप्रियाय ,,
,, जनकेष्टप्रदाय ,,
,, मार्कण्डेयमहातीर्थजातपुण्यप्रदाय ,,
,, वाक्पतिब्रह्मदात्रे ,,
,, चन्द्रलावण्यदायिने ,,
,, नारायणनगेशाय ,,
,, ब्रह्मक्लृप्तोत्सवाय ,,
,, शङ्खचक्रवरानम्रलसत्करतलाय ,, ५०
,, द्रवन्मृगमदासक्तविग्रहाय ,,
,, केशवाय ,,
,, नित्ययौवनमूर्तये ,,
,, अर्थितार्थप्रदात्रे ,,
,, विश्वतीर्थाघहारिणे ,,
,, तीर्थस्वामिसरःस्नातजनाभीष्टप्रदायिने ,,
,, कुमारधारिकावासस्कन्दाभीष्टप्रदाय ,,
,, जानुदघ्नसमुद्भूतपोत्रिणे ,,
,, कूर्ममूर्तये ,,
,, किन्नरद्वन्द्वशापान्तप्रदात्रे ,, ६०

ॐ विभवे श्रीवेङ्कटेशाय नमः
„ वैखानसमुनिश्रेष्ठपूजिताय „
„ सिंहाचलनिवासाय „
„ श्रीमन्नारायणाय „
„ सद्भक्तनीलकण्ठार्च्यनृसिंहाय „
„ कुमुदाक्षगणश्रेष्ठसैनापत्यप्रदाय „
„ दुर्मेधःप्राणहर्त्रे „
„ श्रीधराय „
„ क्षत्रियान्तकरामाय „
„ मत्स्यरूपाय „ ७०
„ पाण्डवारिप्रहर्त्रे „
„ श्रीकराय „
„ उपत्यकाप्रदेशस्थशङ्करध्यातमूर्तये „
„ रुक्माब्जसरसीकूललक्ष्मीकृततपस्विने „
„ लसल्लक्ष्मीकराम्भोजदत्तकह्लारकस्रजे „
„ शालग्रामनिवासाय „
„ शुकदृग्गोचराय „
„ नारायणार्थिताशेषजनदृग्विषयाय „
„ मृगयारसिकाय „
„ वृषभासुरहारिणे „ ८०
„ अञ्जनागोत्रपतये „
„ वृषभाचलवासिने „

| | | |
|---|---|---|
| ओं अञ्जनासुतदात्रे | श्रीवेङ्कटेशाय नमः | |
| ,, माधवीयाघहारिणे | ,, | |
| ,, प्रियङ्गुप्रियभक्षाय | ,, | |
| ,, श्वेतकोलवराय | ,, | |
| ,, नीलधेनुपयोधारासेकदेहोद्भवाय | ,, | |
| ,, शङ्करप्रियमित्राय | ,, | |
| ,, चोलपुत्रप्रियाय | ,, | |
| ,, सुधर्मिणीसुचैतन्यप्रदात्रे | ,, | ९० |
| ,, मधुघातिने | ,, | |
| ,, कृष्णाख्यविप्रवेदान्तदेशिकत्वप्रदाय | ,, | |
| ,, वराहचलनाथाय | ,, | |
| ,, बलभद्राय | ,, | |
| ,, त्रिविक्रमाय | ,, | |
| ,, महते | ,, | |
| ,, हृषीकेशाय | ,, | |
| ,, अच्युताय | ,, | |
| ,, नीलाद्रिनिलयाय | ,, | |
| ,, क्षीराब्धिनाथाय | ,, | १०० |
| ,, वैकुण्ठाचलवासिने | ,, | |
| ,, मुकुन्दाय | ,, | |
| ,, अनन्ताय | ,, | |
| ,, विरिञ्चभ्यर्थितानीतसौम्यरूपाय | ,, | |

| | | |
|---|---|---|
| ॐ सुवर्णमुखरीस्नातमनुजाभीष्टदायिने | श्रीवेङ्कटेशाय नमः | |
| ,, हलायुधजगत्तीर्थसमस्तफलदायिने | ,, | |
| ,, गोविन्दाय | ,, | |
| ,, श्रीनिवासाय | ,, | १०८ |

।। इति श्रीवेङ्कटेशोष्टोत्तरशतनामावलिस्सम्पूर्णा ।।

---

श्रीरस्तु

श्री श्रीनिवासपरब्रह्मणे नमः

॥ श्रीयै श्रीपद्मावत्यै नमः ॥

# ॥ श्रीवेङ्कटेशसहस्रनामस्तोत्रम् ॥

श्रीवसिष्ठ उवाच—

भगवन् केन विधिना नामभिर्वेङ्कटेश्वरम् ।
पूजयामास तं देवं ब्रह्मा तु कमलैः शुभैः ॥ १

पृच्छामि तानि नामानि गुणयोगपराणि किम् ।
मुख्यवृत्तीनि किं ब्रूहि लक्षकाण्यथवा हरेः ॥ २

नारद उवाच—

नामान्यनन्तानि हरेः गुणयोगानि कानि चित् ।
मुख्यवृत्तीनि चान्यानि लक्षकाण्यपराणि च ॥ ३

परमार्थैः सर्वशब्दैरेको ज्ञेयः परः पुमान् ।
आदिमध्यान्तरहितः त्वव्यक्तोऽनन्तरूपभृत् ॥ ४

चन्द्रार्कवह्निवाय्वाद्या ग्रहर्क्षाणि नभो दिशः ।
अन्वयव्यतिरेकाभ्यां सन्ति नो सन्ति यन्मतेः ॥ ५

तस्य देवस्य नाम्नां हि पारं गन्तुं हि कः क्षमः ।
तथाऽपि चाभिधानानि वेङ्कटेशस्य कानिचित् ॥ ६

ब्रह्मगीतानि पुण्यानि तानि वक्ष्यामि सुव्रत ।
यदुच्चारणमात्रेण विमुक्ताघः परं व्रजेत् ॥ ७

वेङ्कटेशस्य नाम्नां हि सहस्रस्य ऋषिर्विधिः ।
छन्दोऽनुष्टुप् तथा देवः श्रीवत्साङ्को रमापतिः ॥ ८

बीजभूतस्तथोंकारो ह्रीं क्लीं शक्तिश्च कीलकम् ।
ॐ नमो वेङ्कटेशायेत्यादिर्मन्त्रोऽत्र कथ्यते ॥ ९

ब्रह्माण्डगर्भः कवचमस्त्रं चक्रगदाधरः ।
विनियोगोऽभीष्टसिद्धौ हृदयं सामगायनः ॥

भास्वच्चन्द्रमसौ यदीयनयने भार्या यदीया रमा
यस्माद्विश्वसृडप्यभूद्यमिकुलं यद्ध्यानयुक्तं सदा ।
नाथो यो जगतां नगेन्द्रदुहितुर्नाथोऽपि यद्भक्तिमान्
तातो यो मदनस्य यो दुरितहा तं वेङ्कटेशं भजे ॥

ऊर्ध्वौ हस्तौ यदीयौ सुररिपुदळने बिभ्रतौ शङ्खचक्रे
सेव्यावङ्घ्री स्वकीयावभिदधदधरो दक्षिणो यस्य पाणिः ।
तावन्मात्रं भवाब्धिं गमयति भजतामूरुगो वामपाणिः
श्रीवत्साङ्कश्च लक्ष्मीर्यदुरसि लसतस्तं भजे वेङ्कटेशम् ॥

इति ध्यायन् वेङ्कटेशं श्रीवत्साङ्कं रमापतिम् ।
वेङ्कटेशो विरूपाक्ष इत्यारभ्य जपेत्क्रमात् ॥ १०

वेङ्कटेशो विरूपाक्षो विश्वेशो विश्वभावनः ।
विश्वसृड् विश्वसंहर्ता विश्वप्राणो विराड्वपुः ॥ ११

शेषाद्रिनिलयोऽशेषभक्तदुःखप्रणाशनः ।
शेषस्तुत्यः शेषशायी विशेषज्ञो विभुः स्वभूः ॥ १२

विष्णुर्जिष्णुश्च वर्धिष्णुरुत्सविष्णुः सहिष्णुकः ।
भ्राजिष्णुश्च ग्रसिष्णुश्च वर्तिष्णुश्च भरिष्णुकः ॥ १३

कालयन्ता कालगोप्ता कालः कालान्तकोऽखिलः ।
कालगम्यः कालकण्ठवन्द्यः कालकलेश्वरः ॥ १४

शम्भुः स्वयम्भूरम्भोजनाभिस्तम्भितवारिधिः ।
अम्भोधिनन्दिनीजानिः शोणाम्भोजपदप्रभः ॥ १५

कम्बुग्रीवः शम्बरारिरूपः शम्बरजेक्षणः ।
बिम्बाधरो बिम्बरूपी प्रतिबिम्बक्रियातिगः ॥ १६

गुणवान् गुणगम्यश्च गुणातीतो गुणप्रियः ।
दुर्गुणध्वंसकृत्सर्वसुगुणो गुणभासकः ॥ १७

परेशः परमात्मा च परञ्ज्योतिः परा गतिः ।
परं पदं वियद्वासाः पारम्पर्यशुभप्रदः ॥ १८

ब्रह्माण्डगर्भो ब्रह्मण्यो ब्रह्मसृड्ब्रह्मबोधितः ।
ब्रह्मस्तुत्यो ब्रह्मवादी ब्रह्मचर्यपरायणः ॥ १९

सत्यव्रतार्थसन्तुष्टस्सत्यरूपी झषाङ्गवान् ।
सोमकप्राणहारी चानीताम्नायोऽब्धिसञ्चरः ॥ २०

देवासुरवरस्तुत्यः पतन्मन्दरधारकः ।
धन्वन्तरिः कच्छपाङ्गः पयोनिधिविमन्थकः ॥ २१

अमरामृतसन्धाता धृतसम्मोहिनीवपुः ।
हरमोहकमायावी रक्षःसन्दोहभञ्जनः ॥ २२

हिरण्याक्षविदारी च यज्ञो यज्ञविभावनः ।
यज्ञीयोर्वीसमुद्धर्ता लीलाक्रोडः प्रतापवान् ॥ २३

दण्डकासुरविध्वंसी वक्रदंष्ट्रः क्षमाधरः ।
गन्धर्वशापहरणः पुण्यगन्धो विचक्षणः ॥ २४

करालवक्त्रः सोमार्कनेत्रः षड्गुणवैभवः ।
श्वेतघोणी घूर्णितभ्रूर्घुर्घुरध्वनिविभ्रमः ॥ २५

द्राघीयान् नीलकेशी च जाग्रदम्बुजलोचनः ।
घृणावान् घृणिसम्मोहो महाकालाग्निदीधितिः ॥ २६

ज्वालाकरालवदनो महोल्काकुलवीक्षणः ।
सटानिर्भिण्णमेघौघो दंष्ट्रारुग्व्याप्तदिक्तटः ॥ २७

उच्छ्वासाकृष्टभूतेशो निःश्वासत्यक्तविश्वसृट् ।
अन्तर्भ्रमज्जगद्गर्भोऽनन्तो ब्रह्मकपालहृत् ॥ २८

उग्रो वीरो महाविष्णुर्ज्वलनः सर्वतोमुखः ।
नृसिंहो भीषणो भद्रो मृत्युमृत्युः सनातनः ॥ २९

सभास्तम्भोद्भवो भीमः शीरोमाली महेश्वरः ।
द्वादशादित्यचूडालः कल्पधूमसटाच्छविः ॥ ३०

हिरण्यकोरस्थलभिन्ननखः सिंहमुखोऽनघः ।
प्रह्लादवरदो धीमान् भक्तसङ्घप्रतिष्ठितः ॥ ३१

ब्रह्मरुद्रादिसंसेव्यः सिद्धसाध्यप्रपूजितः ।
लक्ष्मीनृसिंहो देवेशो ज्वालाजिह्वान्त्रमालिकः ॥ ३२

खड्गी खेटी महेष्वासी कपाली मुसली हली ।
पाशी शूली महाबाहुर्ज्वरघ्नो रोगलुण्ठकः ॥ ३३

मौञ्जीयुक् छात्रको दण्डी कृष्णाजिनधरो वटुः ।
अधीतवेदो वेदान्तोद्धारको ब्रह्मनैष्ठिकः ॥ ३४

अहीनशयनप्रीतः आदितेयोऽनघो हरिः ।
संवित्प्रियस्सामवेद्यो बलिवेश्मप्रतिष्ठितः ॥ ३५

बलिक्षालितपादाब्जो विन्ध्यवलिविमानितः ।
त्रिपादभूमिस्वीकर्ता विश्वरूपप्रदर्शकः ॥ ३६

धृतत्रिविक्रमः साङ्घ्रिनखभिन्नाण्डखर्परः ।
पज्जातवाहिनीधारापवित्रितजगत्त्रयः ॥ ३७

विधिसम्मानितः पुण्यो दैत्ययोद्धा जयोर्जितः ।
सुरराज्यप्रदः शुक्रमदहृत् सुगतीश्वरः ॥

जामदग्न्यः कुठारी च कार्तवीर्यविदारणः ।
रेणुकायाश्शिरोहारी दुष्टक्षत्रियमर्दनः ॥ ३९

वर्चस्वी दानशीलश्च धनुष्मान् ब्रह्मवित्तमः ।
अत्युदग्रः समग्रश्च न्यग्रोधो दुष्टनिग्रहः ॥ ४०

रविवंशसमुद्भूतो राघवो भरताग्रजः ।
कौसल्यातनयो रामो विश्वामित्रप्रियङ्करः ॥ ४१

ताटकारिः सुबाहुघ्नो बलातिबलमन्त्रवान् ।
अहल्याशापविच्छेदी प्रविष्टजनकालयः ॥ ४२

स्वयंवरसभासंस्थ ईशचापप्रभञ्जनः ।
जानकीपरिणेता च जनकाधीशसंस्तुतः ॥ ४३

जमदग्नितनूजातयोद्धाऽयोध्याधिपाग्रणीः ।
पितृवाक्यप्रतीपालस्त्यक्तराज्यः सलक्ष्मणः ॥ ४४

ससीतश्चित्रकूटस्थो भरताहितराज्यकः ।
काकदर्पप्रहर्ता च दण्डकारण्यवासकः ॥ ४५

पञ्चवट्यां विहारी च स्वधर्मपरिपोषकः ।
विराधहाऽगस्त्यमुख्यमुनिसम्मानितः ॥ ४६

इन्द्रचापधरः खड्गधरश्चाक्षयसायकः ।
खरान्तको दूषणारिस्त्रिशिरस्करिपुर्वृषः ॥ ४७

ततः शूर्पणखानासाच्छेत्ता वल्कलधारकः ।
जटावान् पर्णशालास्थो मारीचबलमर्दकः ॥ ४८

पक्षिराट्कृतसंवादो रवितेजा महाबलः ।
शबर्यानीतफलभुग्घनूमत्परितोषितः ॥ ४९

सुग्रीवाभयदो दैत्यकायक्षेपणभासुरः ।
सप्ततालसमुच्छेत्ता वालिहृत्कपिसंवृतः ॥ ५०

वायुसूनुकृतासेवस्त्यक्तपम्पः कुशासनः ।
उदन्वत्तीरगः शूरो विभीषणवरप्रदः ॥ ५१

सेतुकृद्दैत्यहा प्राप्तलङ्कोऽलङ्कारवान् स्वयम् ।
अतिकायशिरश्छेत्ता कुम्भकर्णविभेदनः ॥ ५२

दशकण्ठशिरोध्वंसी जाम्बवत्प्रमुखावृतः ।
जानकीशः सुराध्यक्षः साकेतेशः पुरातनः ॥ ५३

पुण्यश्लोको वेदवेद्यः स्वामितीर्थनिवासकः ।
लक्ष्मीसरःकेळिलोलो लक्ष्मीशो लोकरक्षकः ॥ ५४

देवकीगर्भसंभूतो यशोदेक्षणलालितः ।
वसुदेवकृतस्तोत्रो नन्दगोपमनोहरः ॥ ५५

चतुर्भुजः कोमलाङ्गो गदावान्नीलकुन्तलः ।
पूतनाप्राणसंहर्ता तृणावर्तविनाशनः ॥ ५६

गर्गारोपितनामाङ्को वासुदेवो ह्यधोक्षजः ।
गोपिकास्तन्यपायी च बलभद्रानुजोऽच्युतः ॥ ५७

वैयाघ्रनखभूषश्च वत्सजिद्वत्सवर्धनः ।
क्षीरसाराशनरतो दधिभाण्डप्रमर्दनः ॥ ५८

नवनीतापहर्ता च नीलनीरदभासुरः ।
अभीरदृष्टदौर्जन्यो नीलपद्मनिभाननः ५९

मातृदर्शितविश्वास्य उलूखलनिबन्धनः ।
नलकूबरशापान्तो गोधूलिच्छुरिताङ्गकः ॥ ६०

गोसङ्घरक्षकः श्रीशो बृन्दारण्यनिवासकः ।
वत्सान्तको बकद्वेषी दैत्याम्बुदमहानिलः ॥ ६१

महाजगरचण्डाग्निः शकटप्राणकण्टकः ।
इन्द्रसेव्यः पुण्यगात्रः खरजिच्चण्डदीधितिः ॥ ६२

तालपक्वफलाशी च काळीयफणिदर्पहा ।
नागपत्नीस्तुतिप्रीतः प्रलम्बासुरखण्डनः ॥ ६३

दावाग्निबलसंहारी फलहारी गदाग्रजः ।
गोपाङ्गनाचेलचोरः पाथोलीलाविशारदः ॥ ६४

वंशगानप्रवीणश्च गोपीहस्ताम्बुजार्चितः ।
मुनिपत्न्याहृताहारो मुनिश्रेष्ठो मुनिप्रियः ॥ ६५

गोवर्द्धनाद्रिसन्धर्ता सङ्क्रन्दनतमोऽपहः ।
सदुद्यानविलासी च रासक्रीडापरायणः ॥ ६६

वरुणाभ्यर्चितो गोपीप्रार्थितः पुरुषोत्तमः ।
अक्रूरस्तुतिसम्प्रीतः कुब्जायौवनदायकः ॥ ६७

मुष्टिकोरःप्रहारी च चाणूरोदरदारणः ।
मल्लयुद्धाग्रगण्यश्च पितृबन्धनमोचकः ॥ ६८

मत्तमातङ्गपञ्चास्यः कंसग्रीवानिकृन्तनः ।
उग्रसेनप्रतिष्ठाता रत्नसिंहासनस्थितः ॥ ६९

कालनेमिखलद्वेषी मुचुकुन्दवरप्रदः ।
साल्वसेवितदुर्धर्षराजस्मयनिवारणः ॥ ७०

रुक्मगर्वापहारी च रुक्मिणीनयनोत्सवः ।
प्रद्युम्नजनकः कामी प्रद्युम्नो द्वारकाधिपः ॥ ७१

मण्याहर्ता महामायो जाम्बवत्कृतसङ्गरः ।
जाम्बूनदाम्बरधरो गम्यो जाम्बवतीविभुः ॥ ७२

कालिन्दीप्रथितारामकेलिर्गुञ्जावतंसकः ।
मन्दारसुमनोभास्वान् शचीशाभीष्टदायकः ॥ ७३

सत्राजिन्मानसोल्लासी सत्याजानिः शुभावहः ।
शतधन्वहरः सिद्धः पाण्डवप्रियकोत्सवः ॥ ७४

भद्रप्रियः सुभद्राया भ्राता नाग्नाजितीविभुः ।
किरीटकुण्डलधरः कल्पपल्लवलालितः ॥ ७५

भैष्मीप्रणयभाषावान् मित्रविन्दाधिपोऽभयः ।
स्वमूर्तिकेलिसम्प्रीतो लक्ष्मणोदारमानसः ॥ ७६

प्राग्ज्योतिषाधिपध्वंसी तत्सैन्यान्तकरोऽमृतः ।
भूमिस्तुतो भूरिभोगो भूषणाम्बरसंयुतः ॥ ७७

बहुरामाकृताह्लादो गन्धमाल्यानुलेपनः ।
नारदादृष्टचरितो देवेशो विश्वराड् गुरुः ॥ ७८

बाणबाहुविदारश्च तापज्वरविनाशकः ।
उषोद्धर्षयिताऽव्यक्तः शिववाक्तुष्टमानसः ॥ ७९

महेशज्वरसंस्तुत्यः शीतज्वरभयान्तकः ।
नृगराजोद्धारकश्च पौण्ड्रकादिवधोद्यतः ॥ ८०

विविधारिच्छलोद्विग्नब्राह्मणेषु दयापरः ।
जरासन्धबलद्वेषी केशिदैत्यभयङ्करः ॥ ८१

चक्री चैद्यान्तकः सभ्यो राजबन्धविमोचकः ।
राजसूयहविर्भोक्ता स्निग्धाङ्गः शुभलक्षणः ॥ ८२

घानाभक्षणसम्प्रीतः कुचेलाभीष्टदायकः ।
सत्त्वादिगुणगम्भीरो द्रौपदीमानरक्षकः ॥ ८३

भीष्मध्येयो भक्तवश्यो भीमपूज्यो दयानिधिः ।
दन्तवक्त्रशिरश्छेत्ता कृष्णः कृष्णासखः स्वराट् ॥ ८४

वैजयन्तीप्रमोदी च बर्हिबर्हविभूषणः ।
पार्थकौरवसन्धानकारी दुःशासनान्तकः ॥ ८५

बुद्धो विशुद्धः सर्वज्ञः क्रतुहिंसाविनिन्दकः ।
त्रिपुरस्त्रीमानभङ्गः सर्वशास्त्रविशारदः ॥ ८६

निर्विकारो निर्ममश्च निराभासो निरामयः ।
जगन्मोहकधर्मी च दिग्वस्त्रो दिक्पतीश्वरः ॥ ८७

कल्की म्लेच्छप्रहर्ता च दुष्टनिग्रहकारकः ।
धर्मप्रतिष्ठाकारी च चातुर्वर्ण्यविभागकृत् ॥ ८८

युगान्तको युगाक्रान्तो युगकृद्युगभासकः ।
कामारिः कामकारी च निष्कामः कामितार्थदः ॥ ८९

भर्गो वरेण्यं सवितुः शार्ङ्गी वैकुण्ठमन्दिरः ।
हयग्रीवः कैटभारिः ग्राहघ्नो गजरक्षकः ॥ ९०

सर्वसंशयविच्छेत्ता सर्वभक्तसमुत्सुकः ।
कपर्दी कामहारी च कला काष्ठा स्मृतिर्धृतिः ॥ ९१

अनादिरप्रमेयौजाः प्रधानः सन्निरूपकः ।
निर्लोपो निःस्पृहोऽसङ्गो निर्भयो नीतिपारगः ॥ ९२

निष्प्रेष्यो निष्क्रियः शान्तो निष्प्रपञ्चो निधिर्नयः ।
कर्म्यकर्मी विकर्मी च कर्मेप्सुः कर्मभावनः ॥ ९३

कर्माङ्गः कर्मविन्यासो महाकर्मी महाव्रती ।
कर्मभुक्कर्मफलदः कर्मेशः कर्मनिग्रहः ॥ ९४

नरो नारायणो दान्तः कपिलः कामदः शुचिः ।
तपा जपाऽक्षमालावान् गन्ता नेता लयो गतिः ॥ ९५

शिष्टो द्रष्टा रिपुद्वेष्टा रोष्टा वेष्टा महानटः ।
रोद्धा बोद्धा महायोद्धा श्रद्धावान् सत्यधीः शुभः ॥ ९६

मन्त्री मन्त्रो मन्त्रगम्यो मन्त्रकृत् परमन्त्रहृत् ।
मन्त्रभृन्मन्त्रफलदो मन्त्रेशो मन्त्रविग्रहः ॥ ९७

मन्त्राङ्गो मन्त्रविन्यासो महामन्त्रो महाक्रमः ।
स्थिरधीः स्थिरविज्ञानः स्थिरप्रज्ञः स्थिरासनः ॥ ९८

स्थिरयोगः स्थिराधारः स्थिरमार्गः स्थिरागमः ।
निश्श्रेयसो निरीहोऽग्निर्निरवद्यो निरञ्जनः ॥ ९९

निर्वैरो निरहङ्कारो निर्दम्भो निरसूयकः ।
अनन्तोऽनन्तबाहूरुरनन्ताङ्घ्रिरनन्तदृक् ॥ १००

अनन्तवक्त्रोऽनन्ताङ्गोऽनन्तरूपो ह्यनन्तकृत् ।
ऊर्ध्वरेता ऊर्ध्वलिङ्गो ह्यूर्ध्वमूर्ध्वोर्ध्वशाखकः ॥ १०१

ऊर्ध्वं ऊर्ध्वाध्वरक्षी च ह्यूर्ध्वज्वालो निराकुलः ।
बीजं बीजप्रदो नित्यो निदानं निष्कृतिः कृती ॥ १०२

महानणीयान् गरिमा सुषमा चित्रमालिकः ।
नभस्स्पृङ्नभसो ज्योतिर्नभस्वान्निर्नभा नभः ॥ १०३

अभुर्विभुः प्रभुः शम्भुर्महीयान् भूर्भुवाकृतिः ।
महानन्दो महाशूरो महोराशिर्महोत्सवः ॥ १०४

महाक्रोधो महाज्वालो महाशान्तो महागुणः ।
सत्यव्रतः सत्यपरः सत्यसन्धः सतां गतिः ॥ १०५

सत्येशः सत्यसङ्कल्पः सत्यचारित्रलक्षणः ।
अन्तश्चरो ह्यन्तरात्मा परमात्मा चिदात्मकः ॥ १०६

रोचनो रोचमानश्च साक्षी शौरिर्जनार्दनः ।
मुकुन्दो नन्दनिष्पन्दः स्वर्णबिन्दुः पुरन्दरः ॥ १०७

अरिन्दमः सुमन्दश्च कुन्दमन्दारहासवान् ।
स्यन्दनारूढचण्डाङ्गो ह्यानन्दी नन्दनन्दनः ॥ १०८

अनसूयानन्दनोऽत्रिनेत्रानन्दः सुनन्दवान् ।
शङ्खवान्पङ्कजकरः कुङ्कुमाङ्को जयाङ्कुशः ॥ १०९

अम्भोजमकरन्दाढ्यो निष्पङ्कोऽगरुपङ्किलः ।
इन्द्रश्चन्द्ररथश्चन्द्रोऽतिचन्द्रश्चन्द्रभासकः ॥ ११०

उपेन्द्र इन्द्रराजश्च वागिन्द्रश्चन्द्रलोचनः ।
प्रत्यक् पराक् परं धाम परमार्थः परात्परः ॥ १११

अपारवाक् पारगामी पारावारः परावरः ।
सहस्वानर्थदाता च सहनः साहसी जयी ॥ ११२

तेजस्वी वायुविशिखी तपस्वी तापसोत्तमः ।
ऐश्वर्योद्भूतिकृद्भूतिरैश्वर्याङ्गकलापवान् ॥ ११३

अम्भोधिशायी भगवान् सर्वज्ञस्सामपारगः ।
महायोगी महाधीरो महाभोगी महाप्रभुः ॥ ११४

महावीरो महातुष्टिर्महापुष्टिर्महागुणः ।
महादेवो महाबाहुर्महाधर्मो महेश्वरः ॥ ११५

समीपगो दूरगामी स्वर्गमार्गनिरर्गलः ।
नगो नगधरो नागो नागेशो नागपालकः ॥ ११६

हिरिण्मयः स्वर्णरेता हिरण्यार्चिर्हिरण्यदः ।
गुणगण्यः शरण्यश्च पुण्यकीर्तिः पुराणगः ॥ ११७

जन्यभृज्जन्यसन्नद्धो दिव्यपञ्चायुधो वशी ।
दौर्जन्यभङ्गः पर्जन्यः सौजन्यनिलयोऽलयः ॥ ११८

